## अनुक्रमणिका







## इत्संज्ञाविधानम्

व्याकरणशास्त्रे प्रायः उपत्रिंशानाम् इत्संज्ञा विधीयते अनेकप्रयोजनमभिलक्ष्य । प्राधान्येन इत्संज्ञाविधायकनि सूत्राणि षडेव। अन्यानि च सन्ति कानिचन सूत्राणि तानि न साक्षात् इत्संज्ञां विदधति अपितु अतिदिशन्ति । सम्प्रति तु प्राधान्येन इत्संज्ञाविधायकानि सूत्राणि समुल्लिख्यन्ते ।

उपदेशे .यः अनुनासिकः अच्, उपदेशे च यत् अन्त्यं हल् तत् इत्संज्ञां प्राप्नोति । यथा सुप्रत्यये उकारस्य, क्विप्प्रत्यये पकारस्य च । [उपदेशेऽजनुनासिक इत् । (१/३/२), हलन्त्यम् (१/३/३)]

ञि टु डु इत्येतेषां, समुदायस्य आदितः वर्तमानानाम् इत्संज्ञा भवति । ञिमिदा डुपषच् टुवेपृ इत्यादिषु धातुषु अनेन सूत्रेण समुदायस्य लोपः भवति । [आदिर्ञिटुडवः (१/३/५)]

प्रत्ययस्य आदौ विद्यमानः षकारः, चवर्गटवर्गौ, तद्धितवर्जितस्य प्रत्ययस्य आदितः वर्तमानाः लकरशकारकवर्गाः च इत्संज्ञां प्राप्नुवन्ति। यथा 'शिल्पिनि ष्वुन्' इत्यादौ षकारस्य, 'चरेष्टः' इत्यादौ टकारादीनाम्, 'ल्युट् च' इत्यादौ लकारादीनां च इत्संज्ञा । [ षः प्रत्ययस्य (१/३/६), चुटू(१/३/७), लशक्वतद्धिते (१/३/८)]

## अतिदेशः

अतिदेशः नाम ये परत्र विहिताः धर्माः तम् अतीत्य अन्यत्र तेषां देशः। एवञ्च अन्यत्र उक्तानां कित्त्वादीनाम् अन्यत्र अनुकर्षः एव अतिदेशः। तन्नियमाः अत्र उल्लिखिताः। व्याकरणशास्त्रे कित्त्वं ङित्त्वं णित्त्वं पित्त्वं च अतिदिष्टं विद्यते।

### कित्वातिदेशः।

<u>लिटः किद्वद्भावः –</u>

१. असंयोगाल्लिट् कित् । (१/२/५)

असंयोगात् धातोः परः लिट्प्रत्ययः अपित् कित् भवति । अतुस् – बिभिदतुः । चिच्छिदतुः ।

२. इन्धिभवतिभ्यां च । (१/२/६)

इन्धि–भवति इत्येताभ्यां परः लिट्प्रत्ययः कित् भवति । इन्धेः – 'पुत्र इधे अथर्वणः', भवतेः – बभूव ।

क्त्वासनोः किद्वद्भावः –

१. मृडमृदगुधकुषक्लिशवदवसः क्त्वा । (१/२/७)

मृडादिभ्यः परः क्त्वाप्रत्ययः कित् भवति । अत्र स्यात् प्रश्नः, क्त्वाप्रत्ययः किदेव पुनः किमर्थं किद्वद्भावः अतिदिश्यते इति। अत्र उच्यते, प्रतिप्रसवः अयम् । 'न क्त्वा सेट्' इति सूत्रेण कित्त्वस्य प्रतिषेधं वक्ष्यति । प्राप्तस्य किन्निषेधस्य दूरीकरणाय इदं सूत्रं प्रवृत्तम्। पुनश्च गुधकुषक्लिशानां तु 'रलो व्युपधाद्धलादेः संश्च' इति विकल्पे प्राप्ते नित्यार्थं वचनम् । मृडित्वा, मृदित्वा इत्यादौ तत्प्रयोजनम् ।

२. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । (१/२/८)

रुदादिभ्यः संश्च क्त्वा च कितौ भवतः। अत्रापि रुदविदमुषीणां 'रलो व्युपधाद्धलादेः संश्च' इति सूत्रेण विकल्पे प्राप्ते नित्यार्थं वचनम् । ग्रहेः ग्रहणं तु 'न क्त्वा सेट्' इति प्रतिषिद्धस्य कित्त्वस्य पुनर्विध्यर्थमेव। स्वपिप्रच्छयोः तु सन्नर्थं ग्रहणम् । स्वपिप्रच्छी सेटौ न । एतयोः 'एकाच उपदेशेऽनुदात्तात्' इति इट्प्रतिषेधात्। एवं

सति 'न क्त्वा सेट्' इति सूत्रेण निषेधः वा ' रलो व्युपदाद्धलादेः संश्च' इति सूत्रेण विकल्पः वा न भवति। एवं सति क्त्वा किदेव तिष्ठति। अतः किमर्थं ग्रहणमेतयोः इति स्यात् प्रश्नः । तस्मादुक्तं सन्नर्थं ग्रहणमिति । एतयोः परतः विद्यमानः सन्प्रत्ययः किद्भवति । येन च सम्प्रसारणप्राप्तिः इष्टरूपसिद्धिः च भवति । रुदित्वा/रुरुदिषति। विदित्वा/विविदिषति इत्यादि उदाहरणम्।

३. इको झल् (१/२/९)

इगन्ताद्धातोः परः झलादिः सन् किद्भवति। चिचीषति। चिकीर्षति।

४. हलन्ताच्च (१/२/१०)

इक्समीपाद्धलः परः सन् झलादिः किद्भवति। बिभित्सति।

लिङ्सिचोः किद्वद्भावः –

१. लिङ्सिचावात्मनेपदेषु (१/२/११)



इक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदेषु परतः कितौ भवतः। लिङ् – भित्सीष्ट। सिच् – अभित्त।

२. उश्च (१/२/१२)

ऋवर्णान्ताद्धातोः परौ लिङ्सिचौ झलादी आत्मनेपदेषु परतः कितौ भवतः। कृषीष्ट।

३. हनः सिच् (१/२/१४)

हन्तेर्धातोः परः सिच् कित् भवति। आहत।

४. यमो गन्धने ( १/२/१५)

यमेर्धातोः गन्धने वर्तमानात् परः सिच्प्रत्ययः किद्भवति आत्मनेपदेषु परतः। उदायत।

५. स्थाघ्वोरिच्च (१/२/१७)

तिष्ठतेः धातोः घुसंज्ञकानां च इकारः अन्तादेशः स्यात् सिच्च किद्भवति आत्मनेपदेषु परतः। उपास्थित।

६. किदाशिषि (३/४/१०४)

आशिषि यः लिङ् तस्य यासुडागमः भवति सः चोदात्तः कित् भवति। इष्यात्।

विकल्पेन कित्त्वातिदेशः –

१. वा गमः ( १/२/१३)

गमेः धातोः परौ लिङ्सिचौ आत्मनेपदेषु झलादी वा कितौ भवतः। सङ्गसीष्ट, सङ्गंसीष्ट।

२. विभाषोपयमने (१/२/१६)

यमेः धातोः उपयमने वर्तमानात् परः सिच्प्रत्ययः विभाषा कित् भवति आत्मनेपदेषु परतः। उपायत कन्याम्।

३. रलो व्युपधाद्धलादेः संश्च (१/२/२६)

उकारोपधादिकारोपधाच्च धातोः रलन्तात् हलादेः परः संश्च क्त्वा च सेटौ वा कितौ भवतः। द्युतित्वा, द्योतित्वा।

## ङित्त्वातिदेशः

१. गाङ्कुटादिभ्योऽञ्णिन्ङित् (१/२/१)

गाङादेशात् कुटादिभ्यश्च परे अञ्णितः प्रत्ययाः ङितः स्युः। गाङः – अध्यगीषाताम्। कुटादिभ्यः – कुटिता।

२. विज इट् ( १/२/२)

विजः परः इडादिप्रत्ययः ङिद्वत्स्यात्। उद्विजिता।

३. सार्वधातुकमपित् (१/२/४)

अपित् सार्वधातुकं ङिद्वद्भवति। कुरुतः। कुर्वन्ति।

४. यासुट्परस्मैपदेषूदात्तो ङिच्च (३/४/१०३)

परस्मैपदविषयस्य लिङः यासुडागमः भवति स चोदात्तः भवति ङिच्च। कुर्यात्, कुर्याताम्।

विकल्पेन ङित्त्वातिदेशः –

१. विभाषोर्णोः (१/२/३)

ऊर्णुञ् अच्छादने आस्मात्परः इडादिः प्रत्ययः विभाषा ङिद्वद्भवति। प्रोर्णुविता।

## णित्त्वातिदेशः

१. गोतो णित् (७/१/९०)

गोशब्दात्परं सर्वनामस्थानं णिद्वद्भवति। गौः गावौ गावः।

२. सख्युरसम्बुद्धौ (७/१/९३)

असम्बुद्धौ यः सखिशब्दः तस्मापरं सर्वनामस्थानं णिद्वद्भवति। सखायौ सखायः।

विकल्पेन णित्त्वातिदेशः –

१. णलुत्तमो वा (७/१/९४)

उत्तमः णल्वा णिद् भवति। अहं चकार, अहं चकर।

## पित्त्वातिदेशः

१. आडुत्तमस्य पिच्च (३/४/९२)



लोट्सम्बन्धिनः उत्तमपुरुषस्य आडागमः भवति स च उत्तमपुरुषः पिद्भवति। करवाणि, करवाव।

धातुपाठेऽपि क्वचित् अतिदेशः दृश्यते घटादयः मितः, स्वादयः ओदितः इत्यादिरूपेण।

## इत्संज्ञानिषेधः

'हलन्त्यम्' सूत्रस्य अपवादः –

१. न विभक्तौ तुस्माः (१/३/४)

विभक्तिस्थाः तवर्गसकारमकाराः इतः न स्युः। अतः जसादिषु सकारादीनां लोपः न।

'लशक्वतद्धिते' सूत्रस्य अपवादः –

१. न क्त्वा सेट् (१/२/१८)

क्त्वाप्रत्ययः सेट् न किद् भवति। देवित्वा।

२. निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः (१/२/१९)

शीङादिभ्यः परः निष्ठाप्रत्ययः सेट् न कित् भवति। शयितः शयितवान्।

३. मृषस्तितिक्षायाम् (१/२/२०)

मृषेः धातोः तितिक्षायाम् अर्थे निष्ठा सेट् कित् न भवति। मर्षितः। मर्षितवान्।

४. पूङः क्त्वा च(१/२/२२)

पूङः परः निष्ठाप्रत्ययः क्त्वा च सेट् न कित् भवति। पवितः, पवितवान्। पवित्वा।

स्थानिवद्भावात् प्राप्तस्य पित्त्वस्य अपवादौ –

१. सेर्ह्यपिच्च (३/४/८७)

लोडादेशस्य सेः 'हिः' इत्ययमादेशो भवति अपिच्च भवति। लुनीहि, पुनीहि।

२. वाच्छन्दसि (३/४/८८)

लादेशः छन्दसि विषये हिशब्दः वा अपित् भवति। प्रीणाहि। प्रीणीहि।

विकल्पेन इन्निषेधः –

१. उदुपधाद्भावादिकर्मणोरन्यतरस्याम्। (१/२/२१)

उदुपधाद्धातोः परः भावे आदिकर्मणि च वर्तमानः निष्ठाप्रत्ययः सेट् अन्यतरस्यां न कित् भवति। द्युतितमनेन, द्योतितमनेन। प्रद्युतितः, प्रद्योतितः।

२. नोपधात्थफान्ताद्वा (१/२/२३)

नकारोपधाद्धातोः थकारान्तात् फकारान्ताच्च परः क्त्वाप्रत्ययः सेट् वा न किद् भवति। ग्रथित्वा, ग्रन्थित्वा।

३. वञ्चिलुञ्च्यृतश्च (१/२/२४)

वञ्च्, लुञ्च्, ऋत् इत्येतेभ्यः परः क्त्वाप्रत्ययः सेट् वा न कित् भवति। वचित्वा, वञ्चित्वा।

४. तृषिमृषिकृषेः काश्यपस्य (१/२/२५)

तृषि–मृषि–कृषि इत्येतेभ्यः परः क्त्वाप्रत्ययः सेट् काश्यपस्य आचार्यस्य मते वा न कित् भवति। तृषित्वा, तर्षित्वा। 'न क्त्वा सेट्' इति निषेधे प्राप्ते विकल्पः विधीयते।

********



## इत्संज्ञकाः वर्णाः

(अत्र ये वर्णाः इत्संज्ञां प्राप्नुवन्ति तेषां सङ्ग्रहः कृतः विधायकसूत्राणि उदाहरणानि च उक्तानि।)

अचः –

| इद्भूताः अचः | | इत्संज्ञाविधायकानि सूत्राणि | उदाहरणानि |
|---|---|---|---|
| १ | आ | उपदेशेऽजनुनासिक इत्। | ञिमिदा, ञिक्ष्विदा |
| २ | इ | उपदेशेऽजनुनासिक इत्। | टुनदि |
| ३ | ई | उपदेशेऽजनुनासिक इत्। | ओलजी ओवजी |
| ४ | उ | उपदेशेऽजनुनासिक इत्। | शमु, दमु, डवतु |
| ५ | ऊ | उपदेशेऽजनुनासिक इत्। | धूञ्, गुपू |
| ६ | ऋ | उपदेशेऽजनुनासिक इत्। | बाधृ, याचृ शातृ |
| ७ | ऌ | उपदेशेऽजनुनासिक इत्। | गम्ऌ, शक्ऌ |
| ८ | ए | उपदेशेऽजनुनासिक इत्। | स्थगे, सखे |
| ९ | ओ | उपदेशेऽजनुनासिक इत्। | ओजस्वी |

हलः –

| | इद्भूताः हलः | इत्संज्ञाविधायकानि सूत्राणि | उदाहरणानि |
|---|---|---|---|
| १ | क् | लशक्वतद्धिते<br>हलन्त्यम् | क्त, क्तवतु<br>ऋलृक्, षुक्, ठक् |
| २ | ख् | लशक्वतद्धिते | खश्, खच् |
| ३ | ग् | लशक्वतद्धिते | ग्स्नु |
| ४ | घ् | हलन्त्यम् | खश्, खच् |
| ५ | ङ् | लशक्वतद्धिते<br>हलन्त्यम् | ङ्वनिप्<br>एओङ्, अनङ्, अङ् |
| ६ | च् | चुटू<br>हलन्त्यम् | चानश्, च्फञ्<br>ऐऔच्, युच्, णच् |
| ७ | ञ् | चुटू<br>हलन्त्यम् | ञ्युट्<br>झभञ्, कृञ्, अञ् |
| ८ | ट् | चुटू<br>हलन्त्यम् | टक्<br>हयवरट्, ल्युट्, विट् |
| ९ | ड् | चुटू | डट्, ड्मतुप् |



| | इद्भूताः हलः | इत्संज्ञाविधायकानि सूत्राणि | उदाहरणानि |
|---|---|---|---|
| १० | ण् | चुटू<br>हलन्त्यम् | ण्य, ण्वुल्<br>अण्, अइउण्, लण् |
| ११ | त् | हलन्त्यम् | तव्यत्, यत् |
| १२ | न् | हलन्त्यम् | वुन्, तृन् |
| १३ | प् | हलन्त्यम् | तिप्, क्यप् |
| १४ | म् | हलन्त्यम् | ञमङणनम्, श्नम् |
| १५ | य् | हलन्त्यम् | कपय् |
| १६ | र् | हलन्त्यम् | शषसर्, अनीयर् |
| १७ | ल् | लशक्वतद्धिते<br>हलन्त्यम् | ल्यप्, ल्युट्<br>हल्, ण्वुल्, णमुल् |
| १८ | व् | हलन्त्यम् | खफछठथचटतव् |
| १९ | श् | लशक्वतद्धिते<br>हलन्त्यम् | शप्, शतृ, शानच्<br>जबगडदश्, चानश् |

| | इद्भूताः हलः | इत्संज्ञाविधायकानि सूत्राणि | उदाहरणानि |
|---|---|---|---|
| २० | ष् | षः प्रत्ययस्य<br>हलन्त्यम् | षाकन्<br>घढधष्, त्रपुष् |
| २१ | स् | हलन्त्यम् | छस्, युस्, इस् |

समुदायः –

| | इद्भूताः हलः | इत्संज्ञाविधायकानि सूत्राणि | उदाहरणानि |
|---|---|---|---|
| १ | इर् | उपदेशेऽजनुनासिक इत्<br>हलन्त्यम् | भिदिर्, छिदिर् |
| २ | ञि | आदिर्ञिटुडवः | ञिमिदा |
| ३ | टु | आदिर्ञिटुडवः | टुओश्वि |
| ४ | डु | आदिर्ञिटुडवः | डुवचष् |

* अत्र यद्यपि समुदायस्य इत्संज्ञाविधायकम् एकं सूत्रं नास्ति, तथापि समुदायस्यैव इत्संज्ञायाः कार्यप्रदेशेषु उपादानात् एवम् उक्तम्।



## इत्संज्ञायाः प्रयोजनम्

यद्यपि इत्संज्ञाविधायकानि कानिचन एव सूत्राणि तथापि तेषां प्रयोजनं तु महदेव। प्रायः प्रथमाध्यायतः आरभ्य अष्टमाध्यायपर्यन्तं तत्प्रयोजनसूचकानि सूत्राणि उपलभ्यन्ते। इसंज्ञाविधानस्य सामान्यप्रयोजनन्तु लोपः। उक्तं च 'तस्य लोपः' (१/३/९) इत्यनेन।

अपि च, इद्भूत–उकारयुक्ताः क् च् ट् त् प् इत्येते स्वसवर्णानां ग्रहकाः भवन्ति। अर्थात् कु इत्येतत् कवर्गं गृह्णाति। एवमन्येपि। उक्तं च – 'अणुदित्सवर्णस्य चाप्रत्ययः (१/१/६९), अण् गृह्यमाणः उदिच्च सवर्णानां ग्राहकः भवति स्वस्य च रूपस्य अण्विषये आगमप्रत्ययादेशान् वर्जयित्वा' इति। उदाहरणानि यथा –

कु – लशक्वतद्धिते (१/३/८)

चु – चुटू (१/३/७)

टु – ष्टुना ष्टुः (८/४/४१)

तु – स्तो श्चुना श्चुः (८/४/४०)

पु – कुःप्वोः कःपौ च (८/३/३)

एवं च उकारस्य इत्संज्ञायाः संज्ञान्तरसंरचनायां विनियोगः समभवत्। अन्यानि सुबहूनि सन्ति इत्संज्ञायाः प्रयोजनानि, तानि अधिगमनसौलभ्याय अग्रिमेषु अध्यायेषु विभज्य प्रदर्शितानि।

**********

## माहेश्वरसूत्रे इत्संज्ञायाः प्रयोजनम्

माहेश्वरसूत्रे विद्यमानानाम् अन्त्यवर्णानाम् इत्संज्ञा विधीयते। प्रत्याहारः (वर्णानां सङ्क्षेपः) एव अस्य इत्संज्ञाविधानस्य प्रयोजनम्। उक्तं च – 'आदिरन्त्येन सहेता (१/१/७१), अन्त्येन इता सहितः आदिः मध्यगानां स्वस्य च संज्ञा स्यात्।' व्याकरणशास्त्रे '४३ प्रत्याहाराः अङ्गीकृताः विद्यन्ते। ते च –

१. अण् – अ इ उ
उदाहरणम् – ढ्रलोपे पूर्वस्य दीर्घोऽणः (६/३/१११)
२. अक् – अ इ उ ऋ लृ
उदाहरणम् – अकः सवर्णे दीर्घः (६/१/१०१)
३. अच् – अ इ उ ऋ लृ ए ओ ऐ औ
उदाहरणम् – इको यणचि (६/१/७७)
४. अट् – अ इ उ ऋ लृ ए ओ ऐ औ ह य व र
उदाहरणम् – शश्छोऽटि (८/४/६३)
५. अण् – अ इ उ ऋ लृ ए ओ ऐ औ ह य व र ल
उदाहरणम् – अणुदित्सवर्णस्य चाप्रत्ययः (१/१/६९)
६. अम् – अ इ उ ऋ लृ ए ओ ऐ औ ह य व र ल ञ म ङ ण न। उदाहरणम् – पुमः खय्यम्परे (८/३/६)
७. अश् – अ इ उ ऋ लृ ए ओ ऐ औ ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द
उदाहरणम् – भोभगोऽघोऽपूर्वस्य योऽशि (८/३/१७)
८. अल् – अ इ उ ऋ लृ ए ओ ऐ औ ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह।
उदाहरणम् – अलोन्त्यस्य (१/१/५२)
९. इक् – इ उ ऋ लृ
उदाहरणम् – इको यणचि (६/१/७७)
१०. इच् – इ उ ऋ लृ ए ओ ऐ औ
उदाहरणम् – नादिचि (६/१/१०४)
११. इण् – इ उ ऋ लृ ए ओ ऐ औ ह य व र ल



उदाहरणम् – इणः षः (८/३/३९)
१२. उक् – उ ऋ लृ
उदाहरणम् – उगिदचां सर्वनामस्थाने अधातोः (७/१/७०)
१३. एङ् – ए ओ
उदाहरणम् – एङः पदान्तादति (६/१/१०९)
१४. एच् – ए ओ ऐ औ
उदाहरणम् – एचोऽयवायावः (६/१/७९)
१५. ऐच् – ऐ औ
उदाहरणम् – वृद्धिरादैच् (१/१/१)
१६. हश् – ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द
उदाहरणम् – हशि च (६/१/११४)
१७. हल् – ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह।
उदहरणम् – हलन्त्यम् (१/३/३)
१८. यण् – य व र ल
उदाहरणम् – इको यणचि (६/१/७७)
१९. यम् – य व र ल ञ म ङ ण न
उदाहरणम् – हलो यमां यमि लोपः (८/४/६४)
२०. यञ् – य व र ल ञ म ङ ण न झ भ
उदाहरणम् – अतो दीर्घो यञि (७/३/१०१)
२१. यय् – य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प
उदाहरणम् – अनुस्वारस्य ययि परसवर्णः (८/४/५८)
२२. यर् – य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स।
उदहरणम् – यरोऽनुनासिकेनुनासिको वा (८/४/५८)
२३. वश् – व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द
उदाहरणम् – नेड् वशि कृति (७/२/८)

२४. वल – व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह।

उदाहरणम् – लोपे व्योर्वलि (६/१/६६)

२५. रल् – र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह।

उदाहरणम् – रलो व्युपधाद्धलादेः संश्च (१/२/२६)

२६. र – र ल।

उदाहरणम् – उरण् रपरः (१/१/५१)

२७. मय् – म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प

उदाहरणम् – मय उञो वो वा (८/३/३३)

२८. ङम् – ङ ण न

उदाहरणम् – ङमो ह्रस्वादचि ङमुण् नित्यम्(८/३/३२)

२९. झष् – झ भ घ ढ ध

उदाहरणम् – एकाचो बशो भष् झषन्तस्य स्ध्वोः (८/२/३७)

३०. झश् – झ भ घ ढ ध ज ब ग ड द

उदाहरणम् – झलां जश् झशि (८/४/५३)

३१. झय् – झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प

उदाहरणम् – झयो होन्यतरस्याम् (८/४/६२)

३२. झर् – झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स

उदाहरणम् – झरो झरि सवर्णे (८/४/६५)

३३. झल् – झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह

उदाहरणम् – झलो झलि (८/२/२६)

३४. भष् – भ घ ढ ध

उदाहरणम् – एकाचो बशो भष् झषन्तस्य स्ध्वोः (८/२/३७)

३५. जश् – ज ब ग ड द

उदाहरणम् – झलां जश् झशि। (८/४/५३)



३६. बश् – ब ग ड द

उदाहरणम् – एकाचो बशो भष् झषन्तस्य स्ध्वोः (८/२/३७)

३७ खय् – ख फ छ ठ थ च ट प क प श ष स ह

उदाहरणम् – पुमः खय्यम्परे (८/३/६)

३८. खर् – ख फ छ ठ थ च त प क प श ष स ह

उदाहरणम् – खरि च (८/४/५५)

३९. छव् – छ ठ थ च ट

उदाहरणम् – नश्छव्यप्रशान् (८/३/७)

४०. चय् – च ट त क प

उदाहरणम् – चयोः द्वितीयाः शरि पौष्करसादेरिति वाच्यम्।

४१. चर् – च ट त क प श ष स

उदाहरणम् – अभ्यासे चर्च (८/४/५४)

४२. शर् – श ष स

उदाहरणम् – शरोचि (८/४/४९)

४३. शल् – श ष स ह

उदाहरणम् – शल इगुपधादनिटः क्सः (३/१/४५)

प्रसङ्गात् उच्यते। माहेश्वरसूत्रात् अन्यत्रापि 'आदिरन्त्येन०' सूत्रस्य प्रवृत्तिः एषिता । यथा – 'अभूततद्भावे (५/४/५०)' इति सूत्रे पठितः कृ इति आदिः 'कृञो द्वितीय (५/४/५८)' इति सूत्रे पठितात् कृ इत्यतः परं श्रूयमाणानां कृ भू अस्ति इत्येषां संज्ञा भवति । ततश्च कृञ् चानुप्रयुज्यते लिटि (३/१४०) इत्यत्र त्रयाणाम् अपि ग्रहणम्।

*********

## धातुषु इत्संज्ञायाः प्रयोजनम्

द्विसहस्त्राधिकाः सन्ति धातवः संस्कृतवाङ्मये। ते च प्रायः सानुबन्धाः उच्चारिताः पाणिनिना। अनुबन्धस्य (इत्संज्ञकस्य वर्णस्य) तु महत्प्रयोजनं प्रक्रियादशायां समुत्पद्यते । अस्य निदर्शनं किञ्चित् प्रदर्श्यते।

टुनदि इति समृद्ध्यर्थकः भ्वादिगणस्थः कश्चन धातुः। अस्य धातोः 'टु' 'इ' इत्यनयोः वर्णयोः इत्संज्ञा विधीयते। 'तस्य लोपः' इति सूत्रेण तयोः लोपः भवति। 'नद्' इति अवशिष्यते।

इवर्णः इत्संज्ञायुक्तः इति कारणात् 'इदितो नुम् धातोः' इति सूत्रेण, इदितः धातोः नुम् भवति। नुमागमः कस्य स्थाने भवति इति आकाङ्क्षायाम् आगमस्य मित्त्वात् 'मिदचोन्त्यात् परः' इति सूत्रं प्रवर्तते। अतः लटि परे नन्द् इति रूपं भवति। लटि टित्करणं 'टित आत्मनेपदानां टेरे' इत्यस्य आत्मनेपदे प्रवृत्यर्थम्। लटि अकारोऽपि इत्, लिडादिवैलक्षण्यप्रदर्शनार्थम्। लटि प्रथमपुरुषस्य एकवचनस्य विवक्षायां तिप् विधीयते। तत्रापि पकारः इत्, 'अनुदात्तौ सुप्पितौ' इति स्वरार्थम्। 'नन्द् ति' इति स्थिते, 'कर्तरि शप्' इति सूत्रेण शप्प्रत्ययः। अत्र शकारः इत् 'तिङ्शित् सार्वधातुकम्' इति सार्वधातुकसंज्ञाप्राप्त्यर्थम्। पकारः अपि इत् 'अनुदात्तौ सुप्पितौ', 'सार्वधातुकमपित्' इति सूत्रयोः प्रवृत्यर्थम्। ततः शपि अकारः केवलम् अवशिष्टः। तस्मिन् योजिते, नन्दति इति रूपं सिद्ध्यति। अस्य धातोः परस्मैपदित्वमपि न स्वरितेत्, न वा ङित्, नापि अनुदात्तेत्, न च ञित् इति कारणात्। यतः स्वरितेत्वादिधर्मयुक्तानाम् आत्मनेपदित्वम् उभयपदित्वं च विहितं 'अनुदात्त ङित आत्मनेपदम्', 'शेषात् कर्तरि परस्मैपदम्' इति सूत्रैः।

पुनश्च नन्द्-धातुः ट्विदपि। अस्य प्रयोजनं तु 'ट्वितोऽथुच्' इति सूत्रेण निर्दिष्टम्, भावे अथुच्प्रत्ययः ट्वितः धातोः भवति इति। तेन नन्दथुः इति रूपमपि सिद्ध्यति। अथुच्प्रत्यये च चकारः इत्, अतः 'चितः' इति सूत्रेण अन्तोदात्तता अपि भवति।

एवम् इत्संज्ञायाः प्रयोजनं सर्वव्यापि विद्यते व्याकरणशास्त्रे। अग्रिमकोष्टके धातुसम्बद्धानि इत्संज्ञायाः प्रयोजनानि कोष्टके सङ्गृहीतानि।



| इद्वर्णाः → प्रयोजनम् ↓ | अनुदात्तः | स्वरितः | आ | इ | ई | उ |
|---|---|---|---|---|---|---|
| उभयपदित्वम् | × | ✓ | × | × | × | × |
| इडागमनिषेधः | × | × | ✓ | × | ✓ | × |
| इडागमविकल्पः | × | × | × | × | × | ✓ |
| आदेशः | × | × | × | × | × | × |
| आगमः | × | × | × | ✓ | × | × |
| ह्रस्वनिषेधः | × | × | × | × | × | × |
| वृद्धिनिषेधः | × | × | × | × | × | × |
| प्रत्ययप्राप्तिः | ✓ | × | × | × | × | × |
| ह्रस्वः | × | × | × | × | × | × |
| दीर्घः | × | × | × | × | × | × |
| स्वरः | ✓ | × | × | × | × | × |
| आत्मनेपदित्वम् | ✓ | × | × | × | × | × |

| इद्वर्णाः → प्रयोजनम् ↓ | ऊ | ऋ | ऌ | ए | ओ | ङ् | ञ् |
|---|---|---|---|---|---|---|---|
| उभयपदित्वम् | × | × | × | × | × | × | ☑ |
| इडागमनिषेधः | ☑ | × | × | × | × | × | × |
| इडागमविकल्पः | × | × | × | × | × | × | × |
| आदेशः | × | × | ☑ | × | ☑ | × | × |
| आगमः | × | × | × | × | × | × | × |
| ह्रस्वनिषेधः | × | ☑ | × | × | × | × | × |
| वृद्धिनिषेधः | × | × | × | ☑ | × | × | × |
| प्रत्ययप्राप्तिः | × | × | × | × | × | × | × |
| ह्रस्वः | × | × | × | × | × | × | × |
| दीर्घः | × | × | × | × | × | × | × |
| स्वरः | × | × | × | × | × | ☑ | × |
| आत्मनेपदित्वम् | × | × | × | × | × | ☑ | × |



| इद्वर्णाः → प्रयोजनम् ↓ | ञि | म् | डु | टु | श् | ष् |
|---|---|---|---|---|---|---|
| उभयपदित्वम् | × | × | × | × | × | × |
| इडागमनिषेधः | × | × | × | × | × | × |
| इडागमविकल्पः | × | × | × | × | × | × |
| आदेशः | × | × | × | × | × | × |
| आगमः | × | × | × | × | × | × |
| ह्रस्वनिषेधः | × | × | × | × | × | × |
| वृद्धिनिषेधः | × | × | × | × | × | × |
| प्रत्ययप्राप्तिः | ☑ | × | ☑ | ☑ | × | ☑ |
| ह्रस्वः | × | ☑ | × | × | × | × |
| दीर्घः | × | ☑ | × | × | × | × |
| स्वरः | × | × | × | × | × | × |
| आत्मनेपदित्वम् | × | × | × | × | ☑ | × |

उक्तप्रयोजनसूचकसूत्रोपस्थापनम् –

## अनुदात्तेत्

आत्मनेपदित्वम् –

अनुदात्त ङित आत्मनेपदम् (१/३/१२) इति सूत्रेण अनुदात्तेतः धातोः आत्मनेपदं भवति इति विधीयते। अतः आस (आस्ते) वस् (वस्ते) इत्यदिधातूनाम् आत्मनेपदप्रत्ययाः भवन्ति।

प्रत्ययप्राप्तिः –

अनुदात्तेतश्च हलादेः(३/२/१४९) इति सूत्रेण अनुदात्तेत् यः धातुः हलादिः अकर्मकः, ततः युच् प्रत्ययः भवति इति विधीयते। वृतु, वृध् अनयोः युचि प्रत्यये कृते, अनादेशे वर्त्तनः, वर्द्धनः इति रूपे।

स्वरः –

तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदामह्न्विङोः (६/१/१८३) इति सूत्रेण तासेः अनुदात्तेतः अकारान्तोपदेशाच्च शब्दात् परं लसार्वधातुकमनुदात्तं भवति ह्नुङ् इङ् इत्येताभ्यां परं वर्जयित्वा इति विधीयते। आस– आसे, वस – वस्ते।

## स्वरितेत्

उभयपदित्वम् –

स्वरितञितः कर्त्रभिप्राये क्रियाफले (१/३/७२) इति सूत्रेण स्वरितेतः ये धातवः तेभ्यः आत्मनेपदं भवति कर्तारं चेत् क्रियाफलम् अभिप्रैति। अतः यज्धातोः यजति यजते इति, पच्धातोः पचति पचते इति रूपद्वयम्। एवमन्येषु अपि।

## आदित्

इडागमनिषेधः –

आदितश्च (७/२/१६) इति सूत्रेण आदितः धातोः निष्ठायामिडागमनिषेधः क्रियते। अतः ञिमिदा, ञिक्ष्विदा अनयोः धात्वोः इडागमाभावे, मिन्नः, मिन्नवान्, क्ष्विण्णः, क्ष्विण्णवान् इति रूपाणि भवन्ति।

विभाषा भावादिकर्मणो (७/२/१७) इति सूत्रेण भावे आदिकर्मणि च आदितः धातोः निष्ठायां विकल्पेन इडागमनिषेधः क्रियते। अतः



पूर्वोक्तस्य धातोः मिन्नमनेन, मेदितमनेन इति भावे रूपद्वयम्।

## इदित्

आगमः –

इदितो नुम् धातोः (७/१/५८) इति सूत्रेण इदितः धातोः नुमागमः भवति। अतः कुडि धातोः कुण्डिता, कुण्डितुम्, कुण्डितव्यम् इत्यादिरूपाणि सिद्ध्यन्ति।

अनिदितां हल उपधायाः क्ङिति (६/४/२४) इति सूत्रेण अनिदिताम् अङ्गानां हलन्तानाम् उपधायाः नकारस्य लोपः विधीयते क्ङिति प्रत्यये परतः। अतः इदितः धातोः नकारस्य लोपः न भवति इत्यपि इदित्करणस्य प्रयोजनम्। अनिदिताम् इति उक्तत्वात् वन्द्यते इत्यत्र नकारस्य लोपः न भवति।

## ईदित्

इडगमनिषेधः –

श्वीदितो निष्ठायाम् (७/२/१४) इति सूत्रेण श्वायतेः ईदितश्च निष्ठायाम् इडागमः निषिध्यते। अतः ओलजी, ओवजी अनयोः निष्ठायाम् (क्त, क्तवत्) लग्नः, लग्नवान्, उद्विग्नः, उद्विग्नवान् इति रूपाणि।

## उदित्

इडागमविकल्पः –

उदितः धातोः क्त्वाप्रत्यये परतः वा इडागमः भवति इति विधीयते उदितो वा (७/२/५६) इति सूत्रेण। अतः शमु, तमु, दमु धातूनां क्रमशः शमित्वा/शान्त्वा, तमित्वा/तान्त्वा, दमित्वा/दान्त्वा इति रूपाणि।

## ऊदित्

इडागमविकल्पः –

स्वरतिसूतिसूयतिधूञूदितो वा (७/२/४४) इति सूत्रेण स्वरति, सूति, सूयति, धूञ् इत्येतेभ्यः ऊदिद्भ्यश्च उत्तरस्य वलादेः आर्धधातुकस्य वा इडागमः विधीयते। अतः ऊदितः गुपूधातोः तृच्प्रत्यये परे गोप्ता, गोपिता इति रूपद्वयम्।

## ऋदित्

ह्रस्वनिषेधः –

नाग्लोपिशास्वृदिताम् (७/४/२) इति सूत्रम् अग्लोपिनाम् अङ्गानां शासोः ऋदितां च णौ चङ्युपधायाः ह्रस्वः न भवतीति वदति। अतः बाधृधातोः, याचृधातोः च अबबाधत्, अययाचत् इति रूपे।

## लृदित्

आदेशः –

पुषादिद्युताद्लृदितः परस्मैपदेषु (३/१/५५) इति सूत्रेण पुषादिभ्यः द्युतादिभ्यः लृदिद्भ्यश्च धातुभ्यः परस्य च्लेः परस्मैपदेषु परतः अङादेशः विधीयते। तस्मात् गम्लृधातोः अगमत् इति, शक्लृधातोः अशकत् इति च रूपम्।

## एदित्

वृद्धिनिषेधः –

ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् (७/२/५) इति सूत्रेण हकारान्तानां मकारान्तानां यकरान्ताम् अङ्गानां क्षण–श्वस–जागृ–णि–श्वि इत्येतेषाम् एदितां च इडादौ सिचि परस्मैपदे परतः वृद्धिर्न भवति। अतः रगे, स्थगे, कखे एषां धातूनां अरगीत्, अस्थगीत्, अकखीत् इति रूपाणि।

## ओदित्

आदेशः –

ओदितश्च (८/२/४५) इति सूत्रेण ओकारेतः धातोः उत्तरस्य निष्ठातकारस्य नकारादेशः विधीयते। तस्मात् ओजस्वीधातोः लग्नः, लग्नवान् इति, ओविजीधातोः उद्विग्नः, उद्विग्नवान् इति रूपाणि।

## ङित्

आत्मनेपदत्वम् –

अनुदात्तङितः आत्मनेपदम् (१/४/१२) इति सूत्रम् अनुदात्तेतः ये धातवः ङितश्च तेभ्यः आत्मनेपदप्रत्ययं विदधाति। अतः षूङ्, शीङ् अनयोः आत्मनेपदप्रत्ययलाभात् सूते शेते इति रूपे।



स्वरः –

तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः (६/१/१८३) इति सूत्रेण तासेः अनुदात्तेतः अकारान्तोपदेशाच्च शब्दात् परं लसार्वधातुकमनुदात्तं भवति ह्नुङ् इङ् इत्येताभ्यां परं वर्जयित्वा इति विधीयते।

## ञित्

उभयपदित्वम् –

स्वरितञितः कर्त्रभिप्राये क्रियाफले (१/३/७२) इति सूत्रेण स्वरितेतः ये धातवः तेभ्यः आत्मनेपदं भवति कर्तारं चेत् क्रियाफलम् अभिप्रैति। तस्मात् षुञ्, कृञ् अनयोः धात्वोः सुनुते, कुरुते इति रूपे।

## मित्

ह्रस्वः –

मितां ह्रस्वः (६/४/९२) इति सूत्रं मितः धातवः ये 'घटादयः मितः' इत्यादिना प्रतिपादिताः तेषाम् उपधायाः ह्रस्वः भवति णौ परतः। घटयति, व्यथयति, जनयति, शमयति इत्यादीनि उदाहरणानि।

## शित्

आत्मनेपदित्वम् –

शदेः शितः (१/३/६०) इत्यनेन शदेः यः शित् शिद्भावी शितः वा सम्बन्धी तस्मात् आत्मनेपदप्रत्ययः भवति इति उच्यते। तस्मात् शद्लृ शातने धातोः शीयते इति रूपम्। 'पाघ्राध्मास्था०' इति सूत्रेण धातोः शीयादेशः।

म्रियतेर्लुङ्लिङोश्च (३/३/१०४) म्रियते लुङ्लिङोः शितश्च प्रकृतिभूतान् मृङः तङ् स्यात् नान्यत्र। म्रियते मियेते मियन्ते।

## षित्

प्रत्ययप्राप्तिः –

षिद्भ्यः भिदादिभ्यश्च स्त्रियामङ् प्रत्ययः भवति षिद्भिदादिभ्योङ् (३/३/१०४) इति सूत्रेण। अतः जृष्, त्रपूष् अनयोः जरा, त्रपा इति रूपे।

न केवलं वर्णेभ्यः किन्तु केभ्यश्चित् समुदायेभ्यः अपि इत्संज्ञा विहिता विद्यते। तेषां प्रयोजनमग्रे उपन्यस्तम् अस्ति।

## इरित्

आदेशः –

इरितो वा (३/१/५७) इत्यनेन इरितः धातोः परस्य च्लेः अङादेशः विकल्पेन विधीयते परस्मैपदे परे। अतः 'च्युतिर् आसेचने' धातोः अच्युतत्, अच्योतीत् इति रूपद्वयम्।

## ञीत्

प्रत्ययप्राप्तिः –

ञीतः क्तः (३/२/१८७) इत्यनेन ञीतः धातोः वर्तमाने अर्थे क्तप्रत्ययः भवति। यथा ञिमिदा स्नेहने इत्यस्य क्तप्रत्यये प्राप्ते, मिन्नः इति रूपम्। एवं ञिक्ष्विदा इत्यस्य क्ष्विण्णः, ञिधृषा इत्यस्य धृषः इति च रूपम्।

## ट्वित्

प्रत्ययप्राप्तिः –

ट्वितोऽथुच् (३/३/८९) इदं सूत्रं ट्वितः धातोः अथुच्प्रत्ययं विदधाति भावे। तस्मात् टुवेपृ, टुओश्वि अनयोः अथुच्प्रत्यये कृते वेपथुः, स्वयथुः इति रूपे।

## ड्वित्

प्रत्ययप्राप्तिः –

ड्वितः क्त्रिः (३/३/८८) इत्यनेन ड्वितः धातोः क्त्रिप्रत्ययः विधीयते भावे। अस्मिन् प्रत्यये कृते, डुपचष् इत्यस्य पक्त्रिमम्, डुपप् इत्यस्य उप्त्रिमम्, डुकृञ् इत्यस्य कृत्रिमम् इति रूपम्।

**********



## गणपाठे इत्संज्ञायाः प्रयोजनम्

गणपाठः पाणिनिना प्रणीतः प्रक्रियासौकर्याय। तथापि केचन शब्दाः इत्संज्ञासहिताः एव सन्ति। यथा 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति सूत्रस्य गणपाठे 'नदट्', 'भषट्' इत्यादिशब्दाः टिता सह उच्चारिताः। टित्करणस्य प्रयोजनं तु –

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः (४/१/१५)

इति सूत्रेण स्त्रियां विधीयमानस्य ङीपः प्राप्तिः। तेन नदी भषी इत्यादीनि रूपाणि सिद्ध्यन्ति।

*********

## आदेशागमयोः इत्संज्ञायाः प्रयोजनम्

पूर्वस्थितम् अक्षरं निरस्य नूतनस्य अक्षरस्य उदयः एव आदेशः इति अभिधीयते। उक्तं च 'शत्रुवदादेशः' इति वृद्धैः। स्थितस्य वर्णस्य पार्श्वे अपूर्वस्य अपरस्य वर्णस्य उत्पत्तिः आगमः। तदुक्तं 'मित्रवदागमः' इति।

आदेशागमरूपभेदनिर्धारणे च इत्संज्ञा प्रधानं पात्रं वहति। ये च ङितः शितः च ते आदेशाः भवन्ति (ङिद्भिन्नाः शिद्भिन्नाः अपि आदेशाः सन्ति) । ये च कितः मितः टितः ते तु आगमाः भवन्ति। तेषाम् आद्याद्यवयवत्वेन विधानात्। तत्सम्बद्धनि सूत्राणि अत्र उपन्यस्तानि सोदाहरणम्।

आदेशः –

ङिच्च (१/१/५३)

ङित् अनेकाल् अपि अन्त्यस्य एव स्यात्। यथा 'सख्युरसम्बुद्धौ' इति सूत्रेण विधीयमानः अनङ् अन्त्यस्य इकारस्य (सखि) भवति। 'आनङ् ऋतो द्वन्द्वे' इत्यादयः अन्ये ङित्प्रदेशाः।

अनेकाल्शित्सर्वस्य (१/१/५५)

अनेकाल् यः आदेशः शिच्च स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति। अतः 'अष्टाभ्य औश्' इति विधीयामानः औश्, शित्त्वात् सर्वस्य औङः स्थाने भवति।

आगमः –

आद्यन्तौ टकितौ (१/१/४६)

टित्कितौ यस्य उक्तौ तस्य आद्यन्तावयवौ स्तः। टित् आद्यवयवः भवति। कित् अन्तावयवः भवति। टित्प्रदेशाः यथा – 'आर्धधातुकस्य इड्वलादेः (७/२/३५), ङ्णोः कुक्टुक् शरि इत्यादि। कित्प्रदेशाः – 'भियो हेतुभये षुक्' (७/३/४०) इत्यादि।

मिदचोन्त्यात्परः (१/१/४७)

अचां मध्ये योऽन्त्यः तस्मात् परः तस्यैव अन्तावयवः मित् स्यात्। अतः 'नपुंसकस्य झलचः' इति विधीयमाणः नुम् अन्त्यात् अचः परः भवति। एवं 'रुधादिभ्यः श्नम्' इत्यादौ।

*********

## प्रत्ययेषु इत्संज्ञायाः प्रयोजनम्

बहवः प्रत्ययाः प्रसिद्धाः कृत्तद्धिततङादयः। प्रत्ययाः अपि सानुबन्धाः एव उच्चारिताः पाणिनिना प्रक्रियासौकर्याय। यथा – प्रजापतेः अपत्यार्थे ण्यप्रत्ययः विहितः। तस्मिन् प्रत्यये णकारः इत्संज्ञकः। अतः 'तद्धितेष्वचामादेः' इति सूत्रस्य प्रवृत्तिः, तेन च वृद्धिः भवति। ततः 'प्राजापत्यः' इति सिध्यति। एवं बहुभ्यः वर्णेभ्यः प्रत्ययेषु इत्संज्ञा प्रत्ता। तेषां प्रयोजनसूचकानि सूत्राणि अत्र क्रमशः सङ्गृहीतानि। आदौ एकवर्णाश्रिताः इत्संज्ञाः पुरस्कृत्य प्रवृत्तानि प्रयोजनसूचकानि सूत्राणि निर्दिष्टानि। ततः परं वर्णद्वयाश्रिताः वर्णत्रयाश्रिताः च इत्संज्ञाः पुरस्कृत्य प्रवृत्तानि प्रयोजनसूचकानि सूत्राणि सम्प्रदर्शितानि। यथा किति ङिति च इमानि कार्याणि भवन्ति किति ञिति णिति च इमानि इत्येवम्।

आदौ तावत् प्रयोजनसारसङ्ग्रहः प्रदर्श्यते। प्रत्ययस्थानाम् इड्वर्णानाम् इत्संज्ञायाः २० प्रयोजनानि सन्ति। तानि सर्वाणि आकलय्य केभ्यः केभ्यः वर्णेभ्यः इत्संज्ञाप्रदानेन कानि कानि प्रयोजनानि भवन्ति इत्येषः अंशः कोष्टकद्वारा प्रदर्शितः। तद्दृश्यताम् –



| इड्वर्णाः → प्रयोजनम् ↓ | उ ऋ | क् | ख् | ग् |
|---|---|---|---|---|
| लोपः | × | ☑ | × | × |
| प्रत्ययप्राप्तिः | ☑ | × | × | × |
| ह्रस्वः | ☑ | ☑ | ☑ | × |
| नुमागमः | ☑ | × | × | × |
| आदेशप्राप्तिः | × | ☑ | × | × |
| सम्प्रसारणम् | × | ☑ | × | × |
| आगमप्राप्तिः | × | ☑ | ☑ | × |
| आगमनिषेधः | × | ☑ | × | × |
| स्वरः | × | ☑ | × | × |
| वृद्धिः | × | ☑ | × | × |
| आकारप्राप्तिः | × | ☑ | × | × |
| कुत्वप्राप्तिः | × | × | × | × |
| संज्ञाप्राप्तिः | × | × | × | × |
| गुणः | × | × | × | × |
| लुक्प्राप्तिः | × | × | × | × |
| गुणवृद्धिनिषेधः | × | × | × | ☑ |
| अतिदेशः | × | × | × | × |
| दीर्घः | × | ☑ | × | × |

| इद्वर्णाः → प्रयोजनम् ↓ | घ | ङ | च | ञ् | ट |
|---|---|---|---|---|---|
| लोपः | × | ☑ | × | × | × |
| प्रत्ययप्राप्तिः | × | × | × | ☑ | ☑ |
| ह्रस्वः | × | × | × | × | × |
| नुमागमः | × | × | × | × | × |
| आदेशप्राप्तिः | × | ☑ | × | ☑ | ☑ |
| सम्प्रसारणम् | × | ☑ | × | × | × |
| आगमप्राप्तिः | × | ☑ | × | ☑ | × |
| आगमनिषेधः | × | × | × | × | × |
| स्वरः | × | × | ☑ | ☑ | × |
| वृद्धिः | × | × | × | ☑ | × |
| आकारप्राप्तिः | × | × | × | ☑ | × |
| कुत्वप्राप्तिः | ☑ | × | × | × | × |
| संज्ञाप्राप्तिः | × | ☑ | × | × | × |
| गुणः | × | ☑ | × | × | × |
| लुक्प्राप्तिः | × | × | × | ☑ | × |
| गुणवृद्धिनिषेधः | × | ☑ | × | × | × |
| अतिदेशः | × | × | × | × | × |
| दीर्घः | × | ☑ | × | × | × |



| इद्वर्णाः → प्रयोजनम् ↓ | ड | ण | त | न | प |
|---|---|---|---|---|---|
| लोपः | ☑ | × | × | × | × |
| प्रत्ययप्राप्तिः | × | × | × | × | × |
| ह्रस्वः | × | × | × | × | × |
| नुमागमः | × | × | × | × | × |
| आदेशप्राप्तिः | × | ☑ | × | × | × |
| सम्प्रसारणम् | × | × | × | × | × |
| आगमप्राप्तिः | × | ☑ | × | × | × |
| आगमनिषेधः | × | × | × | × | ☑ |
| स्वरः | × | × | ☑ | ☑ | ☑ |
| वृद्धिः | × | ☑ | × | × | ☑ |
| आकारप्राप्तिः | × | ☑ | × | × | × |
| कुत्वप्राप्तिः | × | × | × | × | × |
| संज्ञाप्राप्तिः | × | × | × | × | × |
| गुणः | × | × | × | × | ☑ |
| लुक्प्राप्तिः | × | × | × | × | × |
| गुणवृद्धिनिषेधः | × | × | × | × | × |
| अतिदेशः | × | ☑ | × | × | ☑ |
| दीर्घः | | | | | |

| इद्वर्णाः → प्रयोजनम् ↓ | र | ल | श | ष | स |
|---|---|---|---|---|---|
| लोपः | × | × | × | × | × |
| प्रत्ययप्राप्तिः | × | × | × | ☑ | ☑ |
| ह्रस्वः | × | × | ☑ | × | × |
| नुमागमः | × | × | × | × | × |
| आदेशप्राप्तिः | × | × | ☑ | × | × |
| सम्प्रसारणम् | × | × | × | × | × |
| आगमप्राप्तिः | × | × | × | × | × |
| आगमनिषेधः | × | × | × | × | × |
| स्वरः | ☑ | ☑ | × | × | × |
| वृद्धिः | × | × | × | × | × |
| आकारप्राप्तिः | × | × | × | × | × |
| कुत्वप्राप्तिः | × | × | ☑ | × | × |
| संज्ञाप्राप्तिः | × | × | ☑ | × | ☑ |
| गुणः | × | × | × | × | × |
| लुक्प्राप्तिः | × | × | × | × | × |
| गुणवृद्धिनिषेधः | × | × | × | × | × |
| अतिदेशः | × | × | × | × | × |
| दीर्घः | × | × | ☑ | × | × |



एकवर्णाश्रिताः इत्संज्ञाः पुरस्कृत्य प्रवृत्तानि प्रयोजनसूचकानि सूत्राणि–

## उगित्

प्रत्ययप्राप्तिः –

उगितश्च (४/१/६) इत्यनेन उगिदन्तात् स्त्रियां ङीप्प्रत्ययः विधीयते। भवत्शब्दस्य डवतुप्रत्ययान्तत्वेन उगित्त्वात् ङीपि अनेन भवती इति रूपम्। एवं पचन्ती व्रजन्ती इत्यादि।

ह्रस्वः –

उगितश्च (६/३/४५) उगितश्च परस्याः नद्याः घादिषु अन्यतरस्यां ह्रस्वः भवति। विदुषीतरा, अत्र वसुप्रत्ययस्य उगित्त्वात् अस्य सूत्रस्य प्रवृत्तिः। ह्रस्वे तु पुंवद्भावात् विद्वत्तरा।

नुमागमः –

अधातोः उगितोः नलोपिनः अञ्चतेश्च नुमागमः स्यात् सर्वनामस्थाने इति 'उगिदचां सर्वनामस्थानेऽधातोः (७/१/७०) इति सूत्रेण विधीयते। अतः पचत्शब्दस्य शतृप्रत्ययान्तस्य उगित्त्वात्, पचन् पचन्तौ पचन्तः इत्यादीनि रूपाणि।

## कित्

आदेशप्राप्तिः –

अदो जग्धिर्ल्यप्ति किति (२/४/३६), अदः जग्धिः स्यात् ल्यपि तादौ किति च। यथा किति क्तप्रत्यये परे, जग्धः इति रूपम्। जग्धवान् इत्यादौ।

वश्चास्यान्यतरस्यां किति (६/१/३९), वयः वस्य वो वा स्यात् किति लिटि। ऊवतुः, ऊवुः, ऊयतुः, ऊयुः इति रूपाणि सिद्ध्यन्ति लिटि।

द्यतिस्यतिमास्थामित्ति किति (७/४/४०), एषाम् इकारः अन्तादेशः स्यात् तादौ किति। क्तप्रत्यये परे दितः सितः मितः स्थितः इति रूपाणि।

शाच्छोरन्यतरस्याम् (७/४/४१), शा,छा इत्येतयोः अन्यतरस्याम् इकारादेशः भवति तकारादौ किति प्रत्यये परतः। क्तप्रत्यये परे शितः/शातः, छितः/छातः इति रूपाणि भवन्ति।

दधातेर्हिः (७/४/४२), दधातेः हिः स्यात् तकारादौ किति प्रत्यये

परे। तस्मात् निष्ठापरकत्वे हितः हितवान् इति रूपे।

दो दद्घोः (७/४/४६), दा इत्येतस्य दद् इत्ययमादेशः भवति तकारादौ किति प्रत्यये परतः। निष्ठापरकत्वे दत्तः, दत्तवान् इति रूपे।

अच उपसर्गात्तः (७/४/४७), अजन्तात् उपसर्गात् परस्य दा इत्यस्य घोः अचः तः स्यात् तादौ किति। प्रत्तम्, अवत्तम्, इत्यादि।

अत एकहल्मध्येनादेशादेर्लिटि (६/४/१२०), लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्य असंयुक्तहल्मध्यस्थस्य अकारस्य एकारः स्यात् अभ्यासलोपश्च किति लिटि। रेणतुः, रेणुः। येमतु, येमुः इत्यादि।

तृफलभजत्रपश्च (६/४/१२२), एषाम् अत एकारः अभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च। तेरतुः, तेरुः, फेलतुः, फेलुः इत्यादि।

राधो हिंसायाम् (६४/१२३), एत्त्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। रेधतुः रेधुः इत्यादि।

वा जॄभ्रमुत्रसाम् (६/४/१२४), एषाम् एत्त्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। भ्रेमतुः, भ्रेमुः इत्यादौ एकारादिः।

फणां च सप्तानाम् (६/४/१२५), एषां वा एत्त्वाभ्यासलोपो

स्तः किति लिटि सेटि थलि च। भ्रेमतुः, भ्रेमुः इत्यादौ एकारादिः।

फणां च सप्तानाम् (६/४/१२५), एषां वा एत्त्वाभ्यासलोपौ स्तः किति सेटि थलि च। फेणतुः, फेणुः इत्यादि।

सम्प्रसारणम् –

वचिस्वपियजादीनां किति (६/१/१५), वचिस्वपियजादीनां सम्प्रसारणं स्यात् किति प्रत्यये परतः। क्तक्तवतू प्रत्यययोः परतः वचेः उक्तः, उक्तवान् इति स्वपेः सुप्तः सुप्तवान् इति च रूपे।

स्वरः –

कितः (६/१/१६५), कितः तद्धितस्य अन्तः उदात्तः। 'यदाग्नेयः' इति उदाहरणम्। अत्र अग्निशब्दात् ढक्प्रत्ययः, यत्र ककारः इत्।

वृद्धिः –

किति च (७/२/११८) किति तद्धिते च परे अचाम् आदेः अचः



वृद्धिः स्यात्। नडादिभ्यः फकि कृते, आदिवृद्धौ नाडायणः, चारायणः इत्यादि।

दीर्घः –

दीर्घः इणः किति (७/४/६९), इणः अभ्यासस्य दीर्घः स्यात् किति लिटि। ईयतुः, ईयुः इत्यत्र अपित्प्रत्ययस्य कित्वातिदेशात् किद्वद्भावात् दीर्घः।

दीर्घोऽकितः (७/४/८३), अकितः अभ्यासस्य दीर्घः स्यात् यङि यङ्लुकि च। एतत्तु अभावमुखं प्रयोजनम्। अकितः दीर्घविधानात्, कितः दीर्घाप्राप्तिः एव प्रयोजनम्। अतः यंयम्यते रंरम्यते इत्यत्र दीर्घाभावः।

ह्रस्वः –

एतेर्लिङि (७/४/२४), उपसर्गात् परस्य इणः अणः

ह्रस्वः स्यात् आर्धधातुके किति लिङि। उदियात्, समियात्, अन्वियात् इत्यादौ।

आगमप्रातिः –

सृजिदृशोर्झल्यमकिति (६/१/५८), 'सृज विसर्गे, दृशिर् प्रेक्षणे' अनयोः धात्वोः झल्यादावकिति प्रत्यये परतः अमागमः भवति। अत्रापि अभावमुखं प्रयोजनम्। अकिति इति उक्तत्वात् तद्भिन्नस्थले एव अमागमः। अतः सृष्टः, दृष्टः इत्यत्र न अमागमः कितः प्रत्ययस्य परकत्वात्।

अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् (६/१/५९), उपदेशे अनुदातः यः ऋदुपधः तस्य अम्वा स्यात् झलादावकिति परे। अत्रापि किति प्रत्यये परे न विकल्पः। तृप्तः, दृप्तः इत्यादि उदाहरणम्।

## खित्

ह्रस्वः –

खित्यनव्ययस्य (६/३/६६), खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात्। अतः आत्ममाने खश्च इति सूत्रेण खश्प्रत्यये कृते कालिम्मन्या, हरिणिम्मन्या इत्यादौ ह्रस्वः।

आगमप्राप्तिः –

अरुर्द्विषदजन्तस्य मुम् (६/३/६७), अरुषः द्विषतः अजन्तस्य च

मुमागमः स्यात् खिदन्ते उत्तरपदे न तु अव्ययस्य। अतः खशि कृते जनमेजयः इत्यत्र मुमागमः।

इच एकाचोम्प्रत्ययवच्च (६/३/६८), इजन्तात् एकाचः अम्स्यात् स च स्वाद्यम्वत् (द्वितीयैकवचनम्) खिदन्ते परे। अतः खशि कृते गाम्मन्यः, स्त्रीम्मन्यः, नरम्मन्यः इत्यादीनि रूपाणि।

## घित्

कुत्वप्राप्तिः –

चजोः कुघिण्यतोः (७/३/५२), चजोः कुत्वं स्यात् घिति ण्यति च परे। भावे घञि पचः कुत्वे पाकः इति रूपम्। एवं त्यागः रागः इत्यादि।

## ङित्

संज्ञाप्राप्तिः –

ङिति ह्रस्वश्च (१/४/६), इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गौ ईदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तः ङिति। अतः मत्यै, मतये इत्यादौ रूपद्वयम्।

आदेशप्राप्तिः –

तस्थस्थमिपां तान्तन्तामः (३/४/१०१) ङिल्लकारसम्बन्धिनां तसादीनां क्रमात् तामादयः आदेशाः स्युः। अतः पच्धातोः एतेषु आदेशेषु कृतेषु लङि अपचताम् ,अपचतम्, अपचत, अपचम् इति रूपाणि।

आतो ङितः (७/२/८१), अतः परस्य ङिताम् आकारस्य इय् स्यात्। अतः एध्–धातोः आतामि कृते, आकारस्य इयादेशे कृते, यकारलोपादिषु कृतेषु एधेते इति रूपम्।

लोपः –

नित्यं ङितः (३/४/९९), सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात्। अपचाव अपचाम इत्यादौ सकारलोपः सिद्ध्यति।

इतश्च (३/४/१००), ङितः लस्य परस्मैपदम् इकारान्तं यत्तस्य लोपः स्यात्। अभवत् अपचत् इत्यादौ इकारलोपात् रूपसिद्धिः।



आगमप्राप्तिः –

आण्नद्याः (७/३/११२), नद्यन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य आडागमः भवति। आटि कृते आटश्च इति वृद्धिः, ततश्च नद्यै, नद्याः इत्यादिरूपाणि सिद्ध्यन्ति।

याडापः (७/३/११३), आबन्तादुत्तरस्य ङितः प्रत्ययस्य याडागमः भवति। रमायै, रमायाः इत्यादिरूपाणि याडागमात् सिद्ध्यन्ति।

सर्वनाम्नः स्याड्ढ्रस्वश्च (७/३/११४), आबन्तात् सर्वनाम्नः परस्य ङितः स्याट् स्यात् आपश्च ह्रस्वः। अयं याडागमस्य अपवादः। सर्वस्यै, सर्वस्याः इत्यादीनि रूपाणि सिद्ध्यन्ति।

विभाषा द्वितीयातृतीयाभ्याम् (७/३/११५) द्वितीयातृतीयाभ्यां ङितः स्याट् स्यात् आपश्च ह्रस्वः। अतः अत्र पक्षे स्याट्, पक्षे याट् प्राप्यते इति कारणात् द्वितीयस्यै, द्वितीयायै इत्यादिरूपाणि सिद्ध्यन्ति।

गुणः –

जाग्रोविचिण्णल्ङित्सु (७/३/८५), जागर्तेः गुणः स्यात् विचिण्णिङिद्भ्यो अन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च। प्रतिषेधनात् जागरः इति घञ्स्थाने गुणः न भवति।

घेर्ङिति (७/३/१११), ङिसंज्ञकस्य ङिति सुपि गुणः स्यात्। अतः हरिशब्दस्य ङे इत्यादिप्रत्ययेषु परेषु गुणः, हरये, हरेः इत्यादिरूपाणि।

अङितश्च (६/४/१०३), अङितश्च हेर्धिः आदेशः भवति। इदम् अभावमुखं प्रयोजनम्। अस्मभ्यं तद्धर्यश्च प्रयन्धि।

## चित्

चितः (६/१/१६३), चितः अन्तः उदात्तः भवति। तकसुते, यके सरस्वतीम् इत्यादौ अकच्प्रत्ययस्य चित्त्वात् अन्तोदात्तः।

तद्धितस्य (६/१/१६४), चितः तद्धितस्य अन्तः उदात्तः स्यात्। कौञ्जायनाः।

## ञित्

लुक्प्राप्तिः –

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः (२/४/५८), ण्यप्रत्ययान्तात्

क्षत्रियगोत्रप्रत्ययान्तात् ऋष्यभिधायिनः गोत्रप्रत्ययान्तात् ञितश्च परयोः युवाभिधायिनोः अणिञोः लुक् स्यात्। अनृष्यानन्तर्ये बिदादिभ्यः अञ्, तस्मात् यूनि इञ् तस्य लुकि, बैदः इति रूपम्।

प्रत्ययप्राप्तिः –

ञितश्च तत्प्रत्ययात् (४/३/१५५), ञिद्यो विकारावयवप्रत्ययः तदन्तात् अञ् स्यात् तयोः एव अर्थयोः। दाधित्थस्य विकारः अवयवः वा दाधित्थम्, शामीलस्य विकारः अवयवः वा शामीलम्।

## टित्

आदेशप्राप्तिः –

टित आत्मनेपदानां टेरे (३/४/७९), टितः लकारस्य स्थाने यान्यात्मनेपदानि तेषां टेरेकारादेशः भवति। एधते एधेते एधन्ते इत्यादौ इकारस्य एकारादेशः।

थासः से (३/४/८०), टितः लकारस्य यः थास् तस्य से आदेशः भवति। एधसे इत्यादौ से आदेशः अनेन सूत्रेण।

प्रत्ययप्राप्तिः –

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः (४/१/१५), टिदादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप्प्रत्ययः भवति। कुरुचरी इत्यत्र टप्रत्ययस्य टित्त्वात् ङीप्।

## डित्

लोपः –

ति विंशतेर्डिति (६/४/१४२), भस्य विंशतेः तिशब्दस्य डिति प्रत्यये परे लोपः स्यात्। विंशतिशब्दात् पूरणार्थे डट्प्रत्यये कृते, तिशब्दस्य लोपे विंशः इति रूपम्।

टेः (६/४/१४३), डिति भस्य टेः लोपः भवति। कतरशब्दात् अदड्डादेशे कृते, डित्त्वात् टिलोपे कतरत् इति रूपम्।

## तित्

स्वरः –

तित्स्वरितम्(६/१/१८५), तित्स्वरितः भवति। ण्यत्, तव्यत् इत्यादौ इदं प्रयोजनं द्रष्टव्यम्।



## नित्

स्वरः –

तादौ च निति कृत्यतौ (६/२/५०), तकारादौ निति तुशब्दवर्जिते कृति परे अनन्तरो गतिः प्रकृत्या स्यात्। 'सङ्गतिं गोः' इत्यादौ।

## पित्

स्वरः –

अनुदात्तौ सुप्पितौ (३/१/४), सुपः पितः च प्रत्ययाः अनुदात्ताः भवन्ति। 'न यो युच्छति' इति उदाहरणम्।

भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति (६/१/१९२), भीप्रभृतीनाम् अभ्यस्तानां पिति लस्वार्वधातुके परे प्रत्ययात् पूर्वमुदात्तं भवति। 'योऽग्निहोत्रं जुहोति' इत्यादि।

गुणः –

गुणोऽपृक्ते (७/३/९१), ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके। प्रौर्णोत्, प्रौर्णोः इत्यादौ गुणः अनेन सिद्ध्यति।

नाभ्यस्तस्यापि पिति सार्वधातुके (७/३/८७), अभ्यस्तसंज्ञकस्य अङ्गस्य लघूपधस्य अजादौ पिति सार्वधातुके गुणः न भवति। नेनिजानि, वेविजानि इत्यादौ गुणाभावः पित्त्वात्।

वृद्धिः –

उतो वृद्धिर्लुकि हलि (७/३/८९), उकारान्तस्य अङ्गस्य वृद्धिर्भवति लुकि सति हलादौ पिति सार्वधातुके। यौति यौषि यौमि, नौति नौषि नौमि इत्यादौ वृद्धिः।

ऊर्णोतेर्विभाषा (७/३/९०), इडादौ सिचि परस्मैपदे परे वा वृद्धिः भवति। प्रोर्णौति प्रोर्णोति। प्रोर्णौषि प्रोर्णोषि इत्यादि।

आगमप्राप्तिः –

ह्रस्वस्य पिति कृति तुक् (६/१/७१), ह्रस्वान्तस्य धातोः पिति कृति तुक् भवति। यथा अग्निचित् सोमसुत् इत्यादौ क्विप्प्रत्यये परे तुगागमः।

तृणह इम् (७/३/९२), तृहः श्नमि कृते इमागमः स्यात् हलादौ पिति। तृणेढि, तृणेक्षि इत्यादौ इमागमः अनेन भवति।

ब्रुवः ईट् (७/३/९३), ब्रुवः परस्य हलादेः पितः ईट् स्यात्। ब्रवीमि, ब्रवीषि, ब्रवीमि, अब्रवीत् इत्यादौ अनेन सूत्रेण ईट् भवति।

यङो वा (७/३/९४), यङन्तात् परस्य हलादेः पितः सार्वधातुकस्य इड् वा स्यात्। वावदीति, रोरवीति इत्यादौ इट्।

अतिदेशः –

पित्करणात् अपितां सार्वधातुकानां ङिद्वद्भावः (सार्वधातुकमपित्, १/२/४), लिट्प्रत्ययस्य किद्वद्भावः (असंयोगाल्लिट् कित्, १/२/५) च भवति।

## रित्

स्वरः –

उपोत्तमं रिति (६/१/२१७), रित्प्रत्ययान्तस्य उपोत्तमम् उदात्तं स्यात्। 'यदाहवनीये'। एवम् अनीयर्, जातीयर्, केलिमर् इत्यादिषु रित्करणात् उदात्तं बोध्यम्।

## लित्

स्वरः –

लिति (६/१/१९३), लकारेत्संज्ञके प्रत्ययात् पूर्वम् उदात्तं भवति। ण्वुल् प्रत्यये लित्करणात् चिकीर्षकः जिहीर्षकः इत्यादौ उदात्तं भवति।

## शित्

आदेशप्राप्तिः –

इषुगमियमां छः (७/३/७७), इषु, गमि, यम इत्येतेषां शिति परतः छकारादेशः भवति। तुदादिभ्यः शः इति विहिते, शकारस्य इत्त्वात् इच्छति इति रूपम्। एवं गच्छति यच्छति इत्यादौ शपः इत्त्वात् छकारादेशः।

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः (७/३/७८) पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद सद इत्येतेषां पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद इत्येते आदेशाः भवन्ति शिति परतः। यथा पा इत्यस्य शपि पिबति इति। एवं जिघ्रति, धमति, तिष्ठति, मनति इत्यादि।



ज्ञाजनोर्जा (७/३/७९), अनयोः जादेशः स्यात् शिति। अतः ज्ञाधातोः जानाति इति, जनधातोः जायते इति च रूपे।

दीर्घः –

ष्ठिवुक्लमुचमां शिति (७/३/७५), एषां दीर्घः स्यात् शिति परतः। ष्ठीवति क्लामति आचामति इत्यादौ शिति परतः दीर्घः।

क्रमः परस्मैपदेषु (७/३/७६), क्रमेः दीर्घः स्यात् परस्मैपदे परे शिति। क्राम्यति, क्रामतः, क्रामन्ति इत्यादौ दीर्घः शपः शित्त्वात्।

ह्रस्वः –

प्वादीनां ह्रस्वः (७/३/८०), पू–इत्येवमादीनां ह्रस्वः भवति शिति परतः। पूञ्धातोः पुनाति इति रूपम्। एवं लूञ्धातोः लुनाति इति।

मीनातेर्निगमे (७/३/८१), मीनातेः अङ्गस्य शिति प्रत्यये परतः ह्रस्वः भवति निगमविषये। प्रमिणन्ति व्रतानि इति उदाहरणम्।

गुणः –

मिदेर्गुणः (७/३/८२), मिदेः इकः गुणः स्यात् इत्संज्ञकशकारादौ। मेद्यति, मेद्यतः, मेद्यन्ति इत्यादौ गुणः भवति शित्परकत्वात्।

आदेच उपदेशेऽशिति (६/१/४५), एजन्तः यः धातुः उपदेशे तस्य आकारादेशः भवति शिति तु प्रत्यये न भवति। अयं विधिः शिद्भिन्नानां विधिः। अतः अस्य विधेः व्यावृत्तिः एव शितः फलम्।

## षित्

प्रत्ययप्राप्तिः –

षिद्गौरादिभ्यश्च (४/१/४१), षिदन्तेभ्यः प्रातिपदिकेभ्यः गौरादिभ्यश्च स्त्रियां ङीष्प्रत्ययः भवति। नर्तकी अत्र नृतीधातोः ष्वुन्प्रत्ययः, तत्र षकारः इत्, अतः ङीष्।

## सित्

संज्ञाप्राप्तिः –

सिति च (१/४/१६), सिति प्रत्यये परतः पूर्वं पदसंज्ञं भवति।

भवतः शस्प्रत्यये परे पूर्वस्य पदत्त्वात् भवदीयः इति रूपम्। एवम् ऊर्णायुः इति रूपम्, ऊर्णाया युस् इति विधानात्।

वर्णद्वयाश्रिताः वर्णत्रयाश्रिताः च इत्संज्ञाः पुरस्कृत्य प्रवृत्तानि प्रयोजनसूचकानि सूत्राणि –

## कित्–ङित्

सम्प्रसारणम् –

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च (६/१/१६), एषां किति ङिति च सम्प्रसारणं स्यात्। यथा ग्रहधातोः क्तप्रत्यये परे गृहीतः इति रूपम्। एवं ग्रहधातोः ङिति परे गृह्णाति इति।

आदेशप्राप्तिः –

च्छ्वोः शूडनुनासिके च(६/४/१९), छ इत्येतस्य सतुक्कस्य वकारस्य च स्थाने यथासंख्यं 'श्' 'ऊठ्' इत्येतावादेशौ भवतः, अनुनासिकादौ प्रत्यये परतः क्वौ झलादौ च क्ङिति। यथा प्रच्छधातोः किति पृष्टः, पृष्टवान्, पृष्ट्वा इत्यादीनि रूपाणि।

घुमास्थागापाजहातिसां हलि (६/४/६६), घुसंज्ञकानाम् आतः ईत् स्यात् हलादौ किति ङिति आर्धधातुके। दीयते,मीयते इत्यादौ ईत्।

अत उत्सार्वधातुके (६/४/११०), उप्रत्ययान्तस्य कृञः अकारस्य उत्स्यात् सार्वधातुके किति ङिति। कुरुतः, कुर्वन्ति इत्यादौ उकारः।

ई हल्यघोः (६/४/११३), श्नाभ्यस्तयोः आतः ईत्स्यात् सार्वधातुके किति ङिति हलि न तु घुसंज्ञकस्य। लुनीतः, पुनीतः, लुनीते इत्यादौ ईकारः अनेन।

इद्दरिद्रस्य (६/४/११४), दरिद्रातेः इकारः स्यात् हलादौ किति ङिति सार्वधातुके। दरिद्रितः, दरिद्रिथः, दरिद्रिवः इत्यादौ इकारादेशः।

भियोऽन्यतरस्याम् (६/४/११५), इकारः स्यात् हलादौ किति ङिति सार्वधातुके। बिभितः, बिभीतः इत्यादौ विकल्पेन इकारः।



ज्वरत्वरस्रिव्यविमवामुपधायाश्च (६/४/२०), एतेषाम् उपधावकारयोः ऊठ् स्यात् क्वौ झलादौ अनुनासिकादौ च प्रत्यये। स्रुतः स्रुतवान्, मूर्तः मूर्तवान् इत्यादौ वकारस्य स्थाने ऊठागमनात् रूपम्।

जहातेश्च (६/४/११६), इत्स्यात् वा हलादौ किति ङिति सार्वधातुके। जहितः पक्षे जहीतः इति रूपम्। एवं जहिथः जहीथः इत्यादि।

अयङ् यि क्ङिति (७/४/२२), शीङो अयङादेशः स्यात् यादौ किति ङिति परे। शय्यते, शाशय्यते, प्रशय्य, उपशय्य इत्यादौ।

आगमप्राप्तिः –

दीङो युडचि क्ङिति (६/४/६३), दीङः परस्य अजादेः क्ङितः आर्धधातुकस्य युट् स्यात्। यथा उपदिदीये उपदिदीयाते, उपदिदीयिरे इत्यादौ।

लोपः –

अनिदितां हल उपधाया क्ङिति(६/४/२४), हलन्तानाम् अनिदिताम् अङ्गानाम् उपधायाः नस्य लोपः स्यात् किति ङिति च। स्रस्तः, ध्वस्तः, स्रस्यते, ध्वस्यते इत्यादि।

अनुदात्तोपदेशवनिततनोत्यादीनामनुनासिकलोपो झलि क्ङिति (६/४/३७), अनुनासिकान्तानाम् एषां वनतेश्च लोपः स्यात् झलादौ किति ङिति परे। यथा रमुधातोः रत्वा रतः रतवान् रति इत्यादि।

आतो लोप इटि च (५/४/६४), अजाद्योः आर्धधातुकयोः क्ङिदिटोः परयोः आतः लोपः स्यात्। किति पपतुः पपुः गोदः कम्बलदः। ङिति प्रदा प्रधा इत्यादि।

गमहनजनखनघसां लोपः क्ङित्यनङि (६/४/९८), एषाम् उपधायाः लोपः स्यात् अजादौ किति ङिति न तु अङि। उपधालोपे सति जग्मतुः जग्मुः इत्यादीनि रूपाणि।

तनिपत्योश्छन्दसि (६/४/९९), एतयोः उपधालोपः किति ङिति प्रत्यये छन्दसि। 'वितत्निरे कवयः', शकुना इव पप्तिम। भाषायां तु लोपाभावात् वितेनिरे पेतिम इति रूपे।

घसिभसोर्हलि च (६/४/१००), घसि भस इत्येतयोः छन्दसि

उपधायाः लोपः भवति हलादौ अजादौ च क्ङिति प्रत्यये परतः। 'बद्धां ते करी धानाः', सन्धिश्च मे'।

श्नसोरल्लोपः (६/४/१११), श्नस्य अस्तेश्च अकारस्य लोपः स्यात् सार्वधातुके किति ङिति। स्तः सन्ति इत्यादौ अस्तेः अकारलोपात् रूपसिद्धिः। एवं रुन्धः रुन्धन्ति इत्यादौ।

श्नाभ्यस्तयोरातः (६/४/११२), अनयोः आतः लोपः स्यात् किति ङिति सार्वधातुके। लुनुते, लुनुवान् इत्यादौ श्ना इत्यस्य आकारलोपः, मिमते, मिमताम् इत्यादौ अभ्यस्तस्य।

लोपो यि (६/४/११८), जहातेः आलोपः स्यात् यादौ सार्वधातुके। जह्यात्, जहिहि इत्यादौ आलोपः अनेन।

राल्लोपः (६/४/२१), रेफात् परयोः छवोः लोपः स्यात् क्वौ झलादौ अनुनासिकादौ च प्रत्यये। यथा मूर्छाधातोः मूर्तः मूर्तवान् इत्यादौ छकारलोपः, तुर्वीधातोः तूर्णः, तूर्णवान् इत्यादौ वकारलोपः।

ह्रस्वः –

उपसर्गाद्ध्रस्व ऊहतेः (७/४/२३), उपसर्गात् उत्तरस्य ऊहतेः अङ्गस्य ह्रस्वः भवति यादौ किति ङिति प्रत्यते। समुह्यते, समुह्य, अभ्युह्य इत्यादौ ह्रस्वः।

दीर्घः –

अनुनासिकस्य क्विझलोः क्ङिति (६/४/१५), अनुनासिकान्तस्य उपधायाः दीर्घः स्यात् क्वौ झलादौ च क्ङिति। यथा शान्तः, शान्तवान्, शान्ता, शान्तिः, शंशान्तः इत्यादौ।

## ञित्–णित्

आदेशप्राप्तिः –

हो हन्तेर्ञ्णिन्नेषु (७/३/५४), ञिति णिति च प्रत्यये नकारे च परे हन्ते हकारस्य कुत्वं स्यात्। घातयति, घातकः (ण्वुल्प्रत्ययः), साधुघाती इत्यादौ।

वृद्धिः –

अचो ञ्णिति (७/२/११५), अजन्ताङ्गस्य वृद्धिः स्यात् ञिति णिति च परे। यथा सखिशब्दे णित्वात् सखायौ सखायः इत्यादि। एवं कारः, हारः इत्यादौ।



अतः उपधायाः (७/२/११६), उपधायाः अतः वृद्धिः स्यात् ञिति णिति च प्रत्यये परतः। ञितः यथा पाकः इत्यादौ घञ्। णितः यथा पाचयति, पाचकः इत्यादि।

तद्धितेष्वचामादेः (७/२/११७), ञिति णिति च तद्धितेषु अचामादेः अचः वृद्धिः स्यात्। गार्ग्यः इत्यादौ यञ्प्रत्ययपरकत्वात् वृद्धिः, औपगवः इत्यादौ णित्प्रत्ययपरकत्वात्।

आगमप्राप्तिः –

आतो युक्चिण्कृतोः (७/३/३३), आदन्तानां युगागमः स्यात् चिणि ञिति णिति कृति च। दायः इत्यादौ ञित्परकत्वात्, दायकः इत्यादौ णित्परकत्वा युक्।

## ञित्–नित्

स्वरः –

ञ्नित्यादिर्नित्यम् (६/१/१९७), ञिति निति च नित्यम् आदिः उदात्तः भवति। गार्ग्यः इत्यादौ ञित्, वासुदेवकः इत्यादौ नित्, वुन्प्रत्ययप्राप्त्या।

## गित् –कित्

आगमनिषेधः –

श्र्युकः किति (७/२/११), श्रिञः एकाचः उगन्ताच्च परयोः गित्कितोः इण्न स्यात्। युत्वा, युतवान्, तीर्त्वा, तीर्णः, तीर्णवान् इत्यादि।

## कित्–ङित्–गित्

निषेधः –

क्ङिति च (१/१/५), गित्–कित्–ङित्–निमित्ते ये गुणवृद्धी प्राप्नुतः ते न भवतः। गित् यथा जिधातोः ग्स्नुप्रत्यये जिष्णुः, चितः, चितवान् इत्यादौ कित्प्रत्ययपरकत्वात् न गुणः, चिनुतः इत्यादौ ङित्प्रत्ययपरकत्वात् न गुणः।

## कित्–ञित्–णित्

आदेशप्राप्तिः –

केकयमित्रयुप्रलयानां यादेरियः (७/३/२), एषां यकारादेः इयादेशः स्यात् ञिति णिति किति च तद्धिते परे। कैकेयः इत्यत्र अञ्। प्रालेयमित्यत्र अण्।

वृद्धिः –

अवयवादृतोः (७/३/११), अवयववाचिनः पूर्वपदादृतुवाचिनः अचाम् आदेः अचः वृद्धिः स्यात् ञिति णिति किति च तद्धिते परतः। पूर्ववार्षिकम्। पूर्वहैमनम्। अपरवार्षिकम्। अपरहैमनम् इत्यादौ वृद्धिः।

सुसर्वार्धाज्जनपदस्य (७/३/१२), सु, सर्व, अर्ध इत्येतेभ्यः उत्तरस्य, उत्तरपदस्य वृद्धिः स्यात् ञिति णिति किति च तद्धिते परतः। सुपाञ्चालकः, सर्वपाञ्चालकः, अर्धपाञ्चालकः।

दिशोऽमद्राणाम् (७/३/१३), दिग्वाचकात् जनपदवाचिनः वृद्धिः स्यात्, ञिति णिति किति च तद्धिते परतः। पूर्वपाञ्चालकः, अपरपाञ्चालकः, दक्षिणपाञ्चालकः।

प्राचां ग्रामनगराणाम् (७/३/१४), दिशः परेषां ग्रामवाचिनां नगरवाचिनां च अङ्गानाम् अवयवस्य च वृद्धिः ञिति णिति किति च तद्धिते परे। पूर्वैषुकामशमः, अपरैषुकामशमः, पूर्वकार्ष्णमृत्तिकः, अपरकार्ष्णमृत्तिकः, पूर्वपाटलिपुत्रकः, अपरपाटलिपुत्रकः इत्यादि।

संख्यायाः संवत्सरसंख्यस्य च (७/३/१५), संख्यायाः उत्तरपदस्य वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे। द्विसांवत्सरिकः, द्विषाष्टिकः, द्विसाप्ततिकः।

वर्षस्याभविष्यति (७/३/१६), संख्यायाः उत्तरस्य वर्षशब्दस्य वृद्धिः स्यात्, ञिति णिति किति च तद्धिते परतः। द्विवार्षिकः, त्रिवार्षिकः।

परिमाणान्तस्यासंज्ञाशाणयोः (७/३/१७), परिमाणान्तरस्य अङ्गस्य संख्यायां परं यदुत्तरपदं तस्य वृद्धिः स्यात् ञिति णिति किति च परतः। द्विकौडविकः, द्विसौवर्णिकम्।

जे प्रोष्ठपदानाम् (७/३/१८), प्रोष्ठपदानाम् उत्तरपदस्य अचाम् आदेः अचः वृद्धिः स्यात् जातार्थे ञिति णिति किति च। प्रोष्ठपदासु जातः प्रोष्ठपादः माणवकः, अण्।



हृद्भगसिन्ध्वन्ते पूर्वपदस्य च (७/३/१९), हृदाद्यन्ते पूर्वोत्तरपदयोः अचाम् आदेः अचः वृद्धिः ञिति णिति किति च। सौहार्दम्। सौहार्द्यम्। सौभाग्यम् इत्यादि।

अनुशतिकादीनां च (७/३/२१), अत्र पूर्वोत्तरपदयोः आद्यचः वृद्धिः स्यात् ञिति णिति किति च परे। अनुशतिकस्य इदम् आनुशतिकम्, आनुहौडिकः आनुसांवरणम्, आधिदैविकम् इत्यादि।

देवताद्वन्द्वे च (७/३/२१), देवताद्वन्द्वे च पूर्वत्तरपदयोः आद्यचः वृद्धिः स्यात्, ञिति णिति किति च परे। आग्निमारुतम्।

प्राचां नगरान्ते (७/३/२४), प्राचां देशे नगरान्ते अङ्गे पूर्वपदस्य उत्तरपदस्य च अचामादेः अचः वृद्धिः स्यात् ञिति णिति किति च। सुह्मनगरे भवः सौह्मनगरः। पौर्वनागरः इत्यादि।

जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् (७/३/२५), जङ्गलाद्यन्तस्य अङ्गस्य पूर्वपदस्य अचमादेः अचः वृद्धिः उत्तरपदस्य वा ञिति णिति किति च। कौरुजङ्गलम्, कौरुजाङ्गलम्। वैश्वधेनवम्, वैश्वधैनवम्।

अर्धात् परिमाणस्य पूर्वस्य तु वा । ७/२/२६), अर्धात् परिमाणवाचकस्य उत्तरपदस्य आदेः अचः वृद्धिः पूर्वपदस्य तु वा ञिति णिति किति च। अर्धद्रोणेन क्रीतम् अर्धद्रौणिकम्, आर्धद्रौणिकम्, आर्धकौडविकम्, अर्धकौडविकम्।

नातः परस्य (७/३/२७), अर्धात् परस्य परिमाणाकारस्य वृद्धिः न पूर्वपदस्य तु वा ञिति णिति किति च।

नञः शुचीश्वरक्षेत्रज्ञकुलनिपुणानाम् (७/३/३०), नञः परेषां शुच्यादिपञ्चानाम् आदेः अचः वृद्धिः पूर्वपदस्य तु वा ञिति णिति किति परे। अशौचम्, आशौचम्, आनैश्वर्यम्, अनैश्वर्यम्।

यथातथयथापुरयोः पर्यायेण (७/३/३१), नञः परयोः एतयोः पूर्वोत्तरपदयोः पर्यायेणादेः अचः वृद्धिः ञिति णिति किति च। आयथातथ्यम्, अयाथातथ्यम्, आयथापुर्यम्, आयाथापुर्यम् इत्यादि।

आकारप्राप्तिः –

देविकाशिंशिपादित्यवाड्दीर्घसूत्रश्रेयसामात् (७/३/१), एषां पञ्चानां वृद्धिप्राप्तौ आदेः अचः आत् ञिति णिति किति च। दाविकम् उदकम्। दविककूलाः शालयः, शांशपचमसः।

* * * * * * * * *